# PRAPANCHAPADI

(Sanskrit Translation of Telugu Muktakas)

Original Telugu Version
by
Jnanpeeth Awardee, Padmabhushan
**Prof. C. NARAYAN REDDY**

*Translation*
by
**Prof. R. SRI HARI**
Head, Dept. of Telugu
University of Hyderabad
Hyderabad

**VARARUCHI PUBLICATIONS**
HYDERABAD

# PRAPANCHAPADI

by

Jnanapeeth Awardee, Padmabhushan
**Prof. C. NARAYAN REDDY**

*Sanskrit Translation*
by

**Prof. R. SRI HARI**
Head, Dept. of Telugu
University of Hyderabad
Hyderabad

**1997**

**Price : Rs. 40**

*For Copies :*
**R. Anantalaxmi**
16-2-836/F/2,
Madhavanagar,
Saidabad,
Hyderabad - 500 059.

*Printed at :*
**Padmasri Graphics,**
Hyderabad. Ph. : 761 2283

*"Vedanta Siromani", "Vedanta Visarada", "Vidvan"*
**Dr. P. SRIRAMACHANDRUDU**
*M.A. Ph.D. (Skt.), M.A. (English), M.A. (Hindi)*
*Recipient of President's Certificate of Honour*
*Professor of Sanskrit O.U. (Rtd.)*

# FOREWORD

The credit of introducing into Telugu a new type of metrical composition (Matra-chandas) goes to Dr. C. Narayan Reddy, the renowned poet and lyricist and the winner of Jnanpith award. The stanza contains five lines (padas) with alliteration (anuprasa) at the end of each pada exepting the third one. This is, therefore, named by the poet **Panchapadi** (पञ्चपदी) and this collection of 108 verses in this metre is called **Panchapadulu** (पञ्चपदुलु). As all these muktakas (independent verses) are intended to the strange ways of the present-day world the title is given a pleasant twist by adding 'Pra' as 'Pra'panchapadulu; thereby suggesting the contents of the poem.

The use of metaphoric and symbolic language has become a common practice with almost all the modern poets. We also come across in their works such traits like the personification of the abstract things and giving a form and habitation to the formless. All such expressions are given a collective name Upacara vakrata— "the beauty of metaphorical expression" by Kuntaka and are expounded with the examples like "स्निग्धश्यामलकान्ति लिप्तवियतः" "the quarters painted with the thick dark line (by the clouds)" and "सूचिभेद्यैस्तमोभिः" "by darkness so dense as to be pierced by a needle". Sri Dr. Narayana Reddy

is an adept artist in using such beautiful expressions, employing at the same time highly effective, sweet and melodious language which defies translation into any other language except by a person of similar genius, pratibha.

Dr. Ravva Sri Hari, a good scholar of both Sanskrit and Telugu has in his turn, introduced, for the first time, into Sanskrit also through his very faithful and beautiful translation of this poem into Sanskrit. Dr. Sri Hari has been so faithful to the original that he did not take liberty which a translator is free to take to preserve the idium of the language used for the translation.

Following are a few examples to show how he has accomplished the difficult task of translating a poem.

The following verse is a very beautiful rendering of the original verse into Sanskrit :

को वा कस्य सहायस्त्विति वा मा वद शुष्कं वेदान्तं
स्वल्पं वा बहु कीर्तयंश्च ननु मा वद व्यर्थं शब्दान्तम्।
धिषणा सर्वा तवैव धनमिति रुचिरः स्वप्नः प्राप्तो वा
सर्वकथास्वपि यत्नेन त्वं मा मेलय ते वृत्तान्तम्
उक्तं सर्वं मदीयमिति ननु मा मेलय मे सिद्धान्तम्॥ 42

Adharma is not the special feature of any particular age says the poet in the following verse :-

पूर्णपरिषदि मानहरणे मण्डिता अद्यापि सन्ति
विदितसत्या अनृतवाचो धर्मजा अद्यापि सन्ति
पूर्वभारतचरितमधुनाऽप्यस्ति नो वा पुरोऽस्माकम्
पापसन्तत्यवनचतुरा नायका अद्यापि सन्ति
शिष्यधिषणाकर्तका ननु देशिका अद्यापि सन्ति॥ 3

The metaphoric expression "नीतिनोलिचे दंडिमगलुन्नारु नेडु" "There are heroic personalities even today who strip the noble conduct (नीति) (of its garments) is made more clear by looking recourse to vacyartha, direct sense.

The use of some of the words from other languages is welcome to enrich the Sanskrit language as in the following verse where the 'plastic' is used which denotes a thing, the product of the modern age :-

प्लास्टिक्पुष्पाण्यपि वा सुरभीकरोति पदवी
अष्टावक्रं विकृतं रम्यं करोति पदवी।
अनुकूलेऽधिकृते सति सत्कारा नैके स्युः
खल्वटशिरसि च शून्ये कैशिकमुदयति पदवी
षण्डं चापि पुमांसं वीरं करोति पदवी।। 58

The use of the word 'पदवी' in the sense of 'पदम्' (official position) is due to Telugu-influence and the word 'उदयति' is used in the causative sense. The well known maxim "अपि माषं मषं कुर्यात् छन्दो भङ्गं न कारयेत्" must have prompted the author to use the word 'खल्वट' instead of 'खल्वाट'.

This Sanskrit translation of 'Pra'panchapadulu by Prof. Sri Hari is new lustruos precious stone studded in gingling anklet of the goddess of learning and I hope, it will attract the appreciative attention of many of the Sanskrit knowing sahrdayas.

Hyderabad
23.9.1997

**P. Sriramachandrudu**

# प्राक्कथनम्

आन्ध्रप्रदेशीय करींनगरमण्डलान्तर्गते हनुमाजीपेटग्रामे लब्धजन्मा सि ना रे इति क्लृप्तनाम्ना प्रथितः कविचन्द्रमाः ज्ञानपीठपुरस्कारपुरस्कृतः पद्मभूषणबिरुदाञ्चितः राज्यसभासभ्यत्वेन समलङ्कृतश्च डॉ. सि. नारायणरेड्डिमहाभागः अद्य सनस्ते भारतदेशे स्वीयां कीर्तिकौमुदीं परिव्यापयन् चकास्ते इति महान् प्रमोदजनको विषयो निखिलभारतीयानां विशेषतश्च आन्ध्राणाम्। उत्तमकविता, प्रगाढविद्वत्ता, मनोज्ञवाग्मिता, कुशलप्रशासकता, सहृदयता---इत्यादयः एकसंश्रयदुर्लभा नैके गुणाः डॉ. रेड्डि महाभागे पुञ्जीभूता इत्ययमाश्चर्यं जनयति। बाल्ये हरिदासानां हरिकथा-प्रवचनानि तेषां साहित्ये, कवितारचने तथा भारतीयसंस्कृतौ च आदरं प्रवेशं च जनयामासुः।

श्री रेड्डि महाभागाः आन्ध्रकविताक्षेत्रे मुक्तककाव्यं, खण्डकाव्यं, समग्रकाव्यं, गेयनाटिका, चलनचित्रगेयानि इति नैकासु प्रक्रियासु लब्धप्रतिष्ठा वर्तन्ते। ते १९५३ वर्षादारभ्य अद्ययावत् माकिं षष्टिग्रन्थानमूल्यान् विरच्य आन्ध्रकवितासरस्वतीमलञ्चक्रुरित्ययं तेषां कविमूर्धन्यतां स्थिरयति।

बी.ए. कक्ष्यापर्यन्तं उर्दूमाध्यमेन शिक्षामधिगतवन्तो रेड्डिमहाभागा उर्दू साहित्ये प्रसिद्धां गज़ल्नाम्नीं छन्दःप्रक्रियां आन्ध्रभाषायामपि प्रयुज्य 'तेलुगु गज़ल्लु' इति कविताकृतिं निर्माय स्वीयां प्रयोगशीलतां निरूपयामासुः। कविता स्वीयमातृभाषा इति, स्वीयश्वास इति च प्रकटितवद्भिः श्री रेड्डिवर्यैः

सुमधुरकण्ठस्वरेण गज़ल्पद्येषु गीयमानेषु को वा सहृदयस्तेषां सङ्गीतसाहित्ययोः परिनिष्ठितामभिज्ञतां च अनुभवन् रसपरवशो न भवति?

एवं उर्दूसाहितीप्रक्रियाभिः प्रभाविता डॉ. रेड्डिवर्याः रुबायीछन्दोनुरूपि पञ्चपदीनामकं नूतनं छन्दः परिकल्प्य प्रपञ्चस्य (लोकस्य) सम्बन्धिनो 'नैकानंशान् वर्णयन्तः आन्ध्रभाषायां "प्रपञ्चपदुलु" (1992) इति मुक्तक-काव्यं अष्टोत्तरशतपद्यात्मकं विरचितवन्तः। अस्यैव ग्रन्थस्य इयं प्रपञ्चपदी संस्कृतानुवादः।

प्रपञ्चपदीति ग्रन्थस्यास्य नाम्ना अर्थत्रयं व्यज्यते। प्रपञ्चशब्दस्य संस्कृतीयरय आन्ध्रभाषायां विश्वार्थकत्त्वेन लोकतत्वप्रतिपादकानां पदानां सम्पुटि रिति प्रथमोऽर्थः। साधारणतया चतुष्पादात्मकत्त्वैनैव प्रसिद्धस्य पद्यस्य अत्र पञ्चपादात्मकत्वेन प्रयुक्ततया तस्य च प्रकृष्टार्थत्वेन प्रकृष्ट पञ्चपादात्मिकेय कृतिरिति द्वितीयोऽर्थः। लोकतत्त्वव्यक्तीकरणपरं वस्तु अत्र सुष्ठु प्रपञ्चितमिति तृतीयोऽर्थः। प्रथमेऽर्थे ग्रन्थवस्तु, द्वितीयेऽर्थे अत्र स्वीकृतं छन्दः, तृतीये रचनाविधानं च संसूचितानीतीदं ग्रन्थकर्त्रा अस्य नामकरणे प्रदर्शितां वैचित्रीं, नैपुण्यं – व्यञ्जयति।

उर्दू, .रसीभाषयोः रुबायीति प्रसिद्धं छन्दो दृश्यते। अस्मिन् चत्वारः पादा निर्दिष्टलयात्मका भवन्ति। प्रथम, द्वितीय, चतुर्थपादेषु अन्त्यप्रासनियतिः स्यात्। तृतीयपादे अन्त्यप्रासो न भवति। तृतीयपादः प्रथमद्वितीयपादयोरनुसन्धायको वा, तयोर्भावं चतुर्थपादं नयन् तस्य विशेषेण रञ्जको वा भवति। सूक्तिविशेषः,

अधिक्षेपः, कविता चमत्कृतिरित्यादिषु अन्यतमः कश्चन गुणविशेषः पञ्चमपादे भवति।

एतादृशस्य रुबायीनाम्नश्छन्दसः चतुष्पादपरिमितस्य पञ्चमं पादं समायोज्य कविना पञ्चपदीति नूत्नश्छन्दसोऽवतारः कल्पित इति कवेः सृजनाशक्तिं सूचयति। एषु पञ्चसु पादेषु तृतीयपादं विना सर्वत्र अन्त्यप्रासो भवति। मूलकर्त्रा अनुसृतोऽयं नियमः सर्वत्र अनुवक्त्राऽपि नियमेन अनुसृतः।

यद्यपि रुबाय्यां बहुधा त्रिस्रगतिरेव भवति तथापि अत्र पञ्चपदीषु मिश्रगतिः, चतुरस्रगतिः, खण्डगतिः, त्रिस्रगतिरिति चतस्रो मात्राच्छन्दोगतयः मूलकर्त्रा उपयुक्ताः। अनुवक्त्राऽपि एताश्छन्दोगतयः स्वीकृताः। एतासां छन्दोगतीनां स्थलीपुलाकन्यायेन कानिचन उदाहरणानि पश्यत।

मिश्रगतिः

दिदृक्षसि चेन्नभोऽगाधं वारिबिन्दुं परीक्षस्व (1)

समुद्रः किं तैललेपे कालिमानं गच्छति ? (2)

पूर्णपरिषदि मानहरणे पण्डिता अद्यापि सन्ति (3)

**चतुरस्रगतिः**

वृक्षं दृष्ट्वाऽनुपदं मानव! संस्मर मृत्स्नां तां किञ्चित् (22)

इदमेव तु मन्त्राक्षरमिति किं प्रकटयसे बहुकालम् ? (40)

को वा कस्य सहायस्त्विति वा मा वद शुष्कं वेदान्तम् (42)

**त्रिस्रगतिः**

अद्रिभिस्तु निरुद्धोऽपि निवृत्तो न झरीगुणः (81)

निरन्तरं प्रवाहिता निर्झरस्य झरीगुणः (87)

यत्तु सन्न विकासयति तत्तु मतं नैव भवेत् (103)

अत्र न केवलमेतादृशा गतिविन्यासा अपि तु नैके अन्ये नियमा अपि मूलकर्त्रा अनुसृता दृश्यन्ते। तृतीयपादवर्जं प्रथम, द्वितीय, चतुर्थ पञ्चमपादाः समरूपा भवन्ति। एषु अन्त्यप्रासाः, अन्तःप्रासाः, पादविरामाश्चेति नियमान् पश्यामः।

अन्त्यप्रासेषु च तत्र तत्र वर्णानां मात्राणां च समतौल्येन मूलकर्तुः प्रयोगो दृश्यते। अनुवक्त्राऽपि न सर्वत्र अपितु नैकत्र एतादृशं समतौल्यं साधितुं यत्नः कृतः। द्वित्राण्युदाहरणानि परिशीलयन्तु।

अक्षरसमतौल्यम्

'कुटिलगतीनां धीरतया ननु प्रतिघटनं खलु धर्माग्रहः' (34)

अत्र 'धर्माग्रह' इत्यस्य कर्माग्रहः, सत्याग्रहः, नित्याग्रह इति,

'को वा कस्य सहायस्त्विति वा मा वद शुष्कं वेदान्तम् (42)

अत्र 'वेदान्तम्' इत्यस्य राध्दान्तम्, वृत्तान्तम्, सिध्दान्तम् इति

'यद्वै मरुतं नोद्भिन्ते तन्नैव विमानम्' (46)

अत्र 'विमानम्' इत्यस्य प्रमाणम्, प्रयाणम्, विधानम् इति अक्षराणां समतौल्यं सुस्पष्टम्। इदमक्षरसमतौल्यं अधोनिर्दिष्टेष्वपि पद्येषु द्रष्टुं शक्यते। 6, 11, 12, 29, 53, 54, 63, 65, 69, 71, 72, 79, 81, 84, 90, 94.

मात्रासमतौल्यम्

'स्तोत्रकरणे सक्तता स्यात् सर्गशक्तौ विलुप्तायाम्' (17)

इत्यत्र विलुप्तायामित्यस्य कतुषितायामिति,

'वारिनिधेर्महतीहा वेलाया उत्क्रमणे'

इत्यत्र उत्क्रमणे इत्यस्य अधिवसने इति अन्त्यप्रासपदे मात्राणां समतौल्यम्।

गज़ल्, रुबायीछन्दसोः प्रासात् पूर्वमपि पदं प्रासबद्धं दृश्यते। पारसी, अरबिक् भाषाच्छन्दसोः प्रसिध्दे रदीफ्, काफियानाम्नि प्रासद्वये अन्त्यप्रासं रदीफ् इति, तत्पूर्वपदे च प्रासं काफिया इति व्यवहर्तुं शक्यते। मूलकर्त्रा अन्त्यप्रासेन साकं प्रासपूर्वपदमपि प्रासबध्दं निबद्धं दृश्यते। न केवलं रदीफ् अपितु काफिया अपि अनेकत्र मूलकर्त्रा उपयुक्ता इति भावः। अनुवक्त्राऽपि इयं काफिया (प्रासपूर्वकपदस्य प्रासबध्दता) न सर्वत्र अपितु तत्र तत्र प्रयुक्ता। कानिचन् उदाहरणानि।

मोहस्तरनिर्दलकं मथनं मौनम्
मनसो दीप्तिविधानं नयनं मौनम् (45)

परान् यस्तु विजानाति परमज्ञः स एवाऽत्र
आत्मानं वेत्ति तु यस्तत्त्वज्ञः स एवात्र
अज्ञं स्वं मनुते यश्चात्मज्ञः स एवात्र
सर्वज्ञं मनुते यश्चाल्पज्ञः स एवात्र (107)

मूले साधारणतः प्रथमपादे यादृशः पदविभागो वर्तते द्वितीयपादेऽपि तादृश एव पदविभागो भवति। एतेन पादद्वये पदानां संख्या समाना भवति। अतः एतत्पञ्चपदीपठने श्रुतिसुभगता जायते। अनुवादकर्त्राऽपि अयं नियमो न बहुलतया परंतु यथावकाशं तत्र तत्र अनुसृतः। पश्यत द्वित्राण्युदाहरणानि –

वृक्षं दृष्ट्वानुपदं मानव! संस्मर मृत्स्नां तां किञ्चित्
तीरं प्राप्यानुपदं मानव! संस्मर कोलं तं किञ्चित् (22)

निरुद्धा तु वीची ननु समुद्धता भवत्येव
निरुद्धं तु रोचिर्ननु समुज्ज्वलं भवत्येव (85)

प्लवनक्षमहस्तेभ्यो नदी वर्त्म ददात्येव
चलनक्षमपादानां वशे वर्त्म भवत्येव (90)

मूले तृतीयपादः सर्वत्र अन्त्यप्रासरहितः, अन्तःप्रासरहितःसन् केवलं यत्या वा प्रासयत्या वा निबद्धो दृश्यते। अनुवादे तु अयं नियमः अतिविरलतयैव पालितः। (पश्यत - 10, 23, 26, 36, 59, 63, 64, 67, 73, 77, 79, 95, 102, 103)

अथास्यां कृतौ वर्णितं वस्तु परिशीलयामः। कृतेश्चरमश्लोकं पश्यत।

कुण्ठितनीतेः परमविभासिका प्रपञ्चपदी
आवृतनीतेः परमविभासिका प्रपञ्चपदी
तिक्तं वा मधुरं वा मथित्वाऽऽह नः सिनारे
कुण्ठितगतिचरणानां ज्ञापिका प्रपञ्चपदी
परिणमतां मूल्यानां बोधिका प्रपञ्चपदी (108)

इयं प्रपञ्चपदी त्रुटितानां जनमनसां उत्साहदात्री, गुप्तनीतीनां प्रकाशयित्री, निद्रितचरणानां जागृतिदात्री, एवं वर्तमानकालिकमूल्यानां प्रबोधयित्री इति वदता कविना अत्र वर्णितं वस्तु सम्यक् संसूचितमेव।

निराशान्धकारे मग्नं मानवं उत्तेजितं कृत्वा लक्ष्यसाधने प्रयत्नशीलं कर्तुं कविना अत्र प्रयत्नः कृतः। आधुनिकजीवनविधाने वर्तमानां संक्लिष्टतां अतिक्रम्य मानवः पुरो गच्छेदिति कविरत्र प्रबोधयति। सदा परिणमतां मूल्यानां (values) सामाजिकचैतन्येन आत्मसात् कृत्वा जीवनं सफलं करणीयमिति अमूल्यः सन्देशः कविना अत्र प्रदत्तः।

मानवे ये दोषा वर्तन्ते स्वार्थ, लोभ, द्वेष, द्रोह, वञ्चना दौष्ट्य, अविनय, अहङ्कार, कृतघ्नतादयः तेषां दूरीकरणं मानवेन कर्तव्यम्। तदैव मानवस्य पुरोगतिर्भवतीति प्रबोधयन्तीमानि मुक्तकानि भर्तृहरेः प्रसिद्धानि सुभाषितानि स्मारयन्ति।

रेड्डिवर्याणां काश्चन पङ्क्तयः सार्वकालिकसत्यमाविष्कुर्वन्त्यः सूक्तिकल्पा भासमानाः पाठकानां हृदयानि परमावर्जयन्ति। पश्यत

1. स्वार्थदोषे वर्धमाने भवति नूनं सर्वनाशः (20)
2. एकहस्ते सर्वकार्ये मानवालेः का गतिः स्यात् (26)
3. वटभूरुहमुपागम्य चूतफलं मान्वेषय (78)
4. नभसि गृहं विनिर्माय मास्मार्षीर्मृत्स्थानम् (91)

5. यत्तु नरं न जीवयति वित्तमदो नैव भवेत् (103)
6. विकसति नहि विज्ञानं विदेशेषु भ्रमणेनैव (104)
7. लघुर्निन्दा वाऽपि नयते परमलघुतां जगति नूनम् (105)
8. सर्वज्ञं मनुते यश्चाल्पज्ञः स एवात्र (107)
9. नमस्करणं तच्च व्यर्थं यत्तु मानसशुद्धिहीनम् (96)

मानवतावादिना कविना मानवं केन्द्रबिन्दुं कृत्वा लिखितेयं प्रपञ्चपदी मानवे चैतन्यशीलतां, क्रियाशीलतां, सत्कार्यशीलतां, शक्तिशीलतां, स्थिर यत्नशीलतां प्रबोधयन्ती तस्य जीवनं सफलं, सफलं, समुज्ज्वलं च कर्तुं प्रेरणां ददातीत्यत्र नैव संशीतिः।

प्रपञ्चपदीनामस्मिन् संस्कृतानुवादे मूलकर्तुः डॉ. सि. नारायणरेड्डि महाभागस्य सहयोगो न विस्मरणीयः। अमूल्यं स्वसमयं विनियुज्य मदीयमिमं संस्कृतानुवादं आमूलाग्रं परिशील्य अनुवादविधाने नैका अमूल्याः सूचनाः प्रदत्ता इति तेषां मम हार्दिकीं कृतज्ञतां प्रकटीकरोमि।

एतत्कृतिमधिकृत्य स्वीयममूल्यमभिप्रायं दत्त्वा प्रोत्साहं दत्तवद्भ्यो विद्वद्वरेभ्यः श्रीमद्भ्यः प्रोफेसर् पुल्लेल श्रीरामचन्द्रुडु महाभागेभ्यः, एवं अनुवादावसरे नैकाः सूचना दत्त्वा सहकृतवद्भ्यः मित्रवर्येभ्यः डॉ. करिडे राजन्नशास्त्रि महोदयेभ्यश्च कृतज्ञता प्रकटीक्रियते।

11-10-1997 प्रोफेसर आर. श्रीहरिः
विजयदशमी

1

दिदृक्षसि चेन्नभोऽगाधं वारिबिन्दुं परीक्षस्व
दिदृक्षसि चेद्रत्नतत्त्वं शिलाशकलं समीक्षस्व
अणुं पृच्छसि चेदवश्यं ज्ञायते ब्रह्माण्डतत्त्वम्
दिदृक्षसि चेन्मौनशिल्पं तुहिनखण्डं समीक्षस्व
दिदृक्षसि चेन्मनुजरूपं मृदः शकलं समीक्षस्व

2

समुद्रः किं तैललेपे कल्मषत्वं गच्छति ?
हिमाद्रिः किं मषीलेपे कालिमानं गच्छति ?
कवाटेष्वथ गवाक्षेषु च दृढं पिहितेष्वपि गृहे
कालवाहिन्यापतन्ती किं तिरो वा गच्छति ?
अभिपतत् किं वार्धकं स्वं जालकं नो विसृजति ?

3

पूर्णपरिषदि मानहरणे पण्डिता अद्यापि सन्ति
विदितसत्या अनृतवाचो धर्मजा अद्यापि सन्ति
पूर्वभारतचरितमधुनाप्यस्ति नो वा पुरोऽस्माकम् ?
पापसन्तत्यवनचतुरा नायका अद्यापि सन्ति
शिष्यधिषणाकर्तका ननु देशिका अद्यापि सन्ति

विटप एव स्थितो गगनं सञ्जिहीर्षसि मानव ?
तीर एव स्थितो जलधिं व्याजिघृक्षसि मानव ?
त्वं तु मानव! हस्तमात्रो व्याममात्रं त्वीषणम्
कोशमस्पृष्ट्वैव दातुः कीर्तिमिच्छसि मानव ?
त्यागमविधायैव नेतुः ख्यातिमिच्छसि मानव ?

5

भूतकालो नैव पुनरावर्तते विदितं त्विदम्
भ्रष्टतारा नैव चाभ्रं प्राप्नुते विदितं त्विदम्
तुहिनसंवृतमानसेभ्यः किमिति दूरं यान्ति नो
जीर्णपर्णं नैव शाखामाश्रयति विदितं त्विदम्
कुण्ठितः श्वासो न पुरतः सञ्चलति विदितं त्विदम्

6

पत्रजाते महति दुग्धे स्रुता कविता बिन्दुवत्
अनुभवे वा महत्युप्ते जात आत्मा रोहवत्
सर्ववस्तुन एकसूत्रे नियमनं खलु बालता
ज्ञप्तिजाले महति दीप्ते ज्वलति रूपं दिशावत्
रूपजाले महति चलिते दृक् प्रसुप्ता पक्षवत्

7

उपालम्भकमदस्याग्रे धर्मकण्ठो भवति मूकः किम् ?
तमःकञ्चुकधनस्याग्रे न्यायवेदी भवति काणा किम् ?
छिद्यते नहि कान्तिवृक्षो मलिनतपसा क्रम्यमाणोऽपि
स्वार्थवृत्ते गूढघाते सङ्घवाहो भवति पङ्गुः किम् ?
दुर्मतीनामशनिघाते ज्ञानवाटी भवति भसितं किम् ?

8

भवेन्नभसः परिमितिर्नन्नु वीक्षणस्य तु भवति किम् ?
भवेद्धरित्तां परिमितिर्नन्नु सन्नतेः सा भवति किम् ?
वितथ एव हि यत्न ईदृक् सर्ववस्तुषु मितिविधौ
भवेद्वचसां परिमितिर्नन्नु भावनाया भवति किम् ?
भवेच्छ्वसितेः परिमितिर्नन्नु कांक्षितानां भवति किम् ?

## 9

जीर्णपर्णं पतत् रुद्ध्वा किं प्रयोजनमाप्यते ?
केशजालं पतत् रुद्ध्वा किं प्रयोजनमाप्यते ?
अनिष्टाऽपि प्रकृतिसिद्धा परिणतिः खलु जगत्याम्
स्रवद्धिमिकां छादयित्वा किं प्रयोजनमाप्यते ?
गलच्चायुर्गोपयित्वा किं प्रयोजनमाप्यते ?

## 10

महीनेत्रस्योहदूरं गगनमथ स्वप्नः
बीजदृष्टेर्नभःस्पर्शी भूरुडथ स्वप्नः
स्वप्नरहिता जगति शाश्वतसत्यमस्ति च वा ?
पृषन्नेत्रस्याम्बुधिः खलु फेनिलः स्वप्नः
लेखिनीनेत्रस्य वशगं पुस्तमथ स्वप्नः

## 11

वस्त्वलब्धं क्वचित् स्यादिति मित्र! तन्मा अपेक्षस्व
पुरः स्थितमथ वस्तु न तवेत्यक्षि! तन्मा उपेक्षस्व
दीपकणिका वरं नूनं त्वन्धतमसा वृतगृहे च
अलब्धाय प्रतिक्षणमथ हृदय तन्मा अवेक्षस्व
उपलमपि वा मुहुर्मुहुरथ दैव! तन्मा परीक्षस्व

## 12

तिक्तसत्यं गीर्यते चेज्जीवितं वैद्यालयः
मनोऽगाधं पठ्यते चेदनुभवो विद्यालयः
शिक्षयेदथ कश्चनेति भ्रान्तिरेव वृथा वृथा
क्रमपदैर्ननु नृत्यते चेन्मेदिनी नाट्यालयः
ऋजुभिरक्षिभिरीक्ष्यते चेदणुरणुस्तत्त्वालयः

## 13

खनसि चेत् हृदयान्तरालं प्राप्नुषे बहुहीरजालम्
स्वरलयान् यदि संविधत्से हंसकान्यनुयान्ति नित्यम्
बध्दलक्ष्यस्यात्र पुंसो वस्तु साध्यं किं न लोके ?
शक्तिरथ चेदस्ति दिवसे नैकतारा वीक्षसे त्वम्
शक्नुषे चेन्मरोर्मध्ये नैकगङ्गा.वीक्षसे त्वम्

## 14

नवाः क्षतयो हृदयमुद्रितमूर्तयो ननु सन्तु नाम
तप्तमश्रु च गीतमुद्रितशोकरूपं वदतु नाम
भीरुतामरुतं निरन्तरमुच्छ्वसन् क्रममाण देह !
असृग्गाढं पूर्ववृत्ते शपथरूपं सरतु नाम
मृदुस्त्यागः स्मृतिपथाङ्कितचिह्नरूपो भातु नाम

## 15

दर्पणे ननु मलिनकान्तौ किं न पश्यामः स्वरूपम् ?
दुर्दिने ननु शीकराढ्ये किं न यामः पुरोभागम् ?
क्रूरमृत्युः कदाचिन्ननु ग्रसेदिति विज्ञाय चापि
स्फुरति हृदये वेगतो ननु सारयामः किं न रुधिरम् ?
लक्ष्यसिद्ध्यै बद्धमुष्ट्या किं न यामः पुरः सततम् ?

## 16

अरुचिकरसम्भाषणं ननु स्वीयपेट्यामेव विसृज
निष्फलांश्च प्रसादान् ननु स्वीयवेश्मन्येव विभज
वेदिकामारूढवन्तं सर्व एव हि पृच्छंति त्वाम्
क्रियाशून्यं भाषितं ननु शयनधामन्येव निगद
यातयामान् प्रतापान् ननु स्वीयविग्रह एव विलय

## 17

स्तोत्रकरणे सक्तता स्यात् सर्गशक्तौ विलुप्तायाम्
व्यर्थवाचापरत्वं स्यात् वादशक्तौ विनष्टायाम्
स्फुलिङ्गश्चेत् स्वल्पमात्रो ज्वलति किंनो कदाचिद्वा
भीरुतमसो व्यापनं स्यात् रक्तशक्तौ प्रनष्टायाम्
कुलीराणां प्रभुत्वं स्यात् मनुजवृत्तौ कलुषितायाम्

## 18

विपत्काले देवपूजाकारका यत्नाः किमर्थाः ?
व्यर्थवाग्भिः शरीरासृक्छोषका बोधाः किमर्थाः ?
कालगत्यामतित्वरितं धावयन्त्यामिह तु लोकम्
भूतकालिकविषयशोधे तत्परा गाथाः किमर्थाः ?
धर्मपत्नीद्रोहचिन्तनतत्परा रामाः किमर्थाः ?

19

निजगृहे धान्यैः प्रपूर्णेऽप्युञ्छयत्यनिशं तु लोभः
पेटिकास्थां काकिणीमन्वेषयति धूलौ तु लोभः
ज्ञायते नहि लोभतत्त्वं विना त्वन्तस्तरच्छेदम्
स्वल्पसुप्तिं चापि तरलं हापयत्यनिशं तु लोभः
मनः कृत्वा रुद्रभूमिं भस्मयत्यनिशं तु लोभः

20

किन्वयं ननु मूर्खलोको भृशं नैच्यं याति नित्यम् !
पङ्कजाले परिलुठन्नपि भावयति तच्छयनगेहम्
स्वार्थदोषे वर्धमाने भवति नूनं सर्वनाशः
अन्नदातुर्गृहस्यैव च्छिद्रकरणे ज्ञानमधिकम्
नीतिनिर्मितवसतिमविनयविषधरो ननु विशति निभृतम्

## 21

यासि चेन्न क्षतिर्बाष्पं तपच्चाक्ष्णोर्वीक्ष्य याहि
त्यजसि चेन्न क्षतिः कुन्थत्स्नायुचलनं वीक्ष्य याहि
विदितसर्वं यान्तमेव त्वामिदं विज्ञापनं मे
हससि चेन्न क्षतिर्मज्जत्प्लवक्षोभं वीक्ष्य याहि
दहसि चेन्न क्षतिः काचिद्दहनकीलां वीक्ष्य याहि

## 22

वृक्षं दृष्ट्वानुपदं मानव! संस्मर मृत्स्नां तां किञ्चित्
तीरं प्राप्यानुपदं मानव! संस्मर कोलं तं किञ्चित्
महदपि पदमधिरूढो मा विस्मर रे तव तं जनिहेतुम्
सौधारूढोऽनुपदं मानव! संस्मर तं सोपानं किञ्चित्
राज्यारूढोऽनुपदं मानव! संस्मर वाग्दानं किञ्चित्

23

समारूढारोहणेभ्यः प्राप्तमौन्नत्यं तु शस्तम्
विहितगाहेभ्यश्च नीरे प्राप्तगाधत्वं तु शस्तम्
स्वीयगम्ये प्राप्त एव तु सार्थकं भवदीयगमनम्
अन्विताभ्यः सभाभ्योऽपि प्राप्तविज्ञानं हि शस्तम्
पठितपुस्तकततिभ्योऽपि प्राप्तपारम्यं हि शस्तम्

24

कियद्दूरं चलितवानिति श्रममनन्तं प्राप्तवानसि ?
जीवितं बहुदीर्घमिति किन्नवसहभावं प्राप्तवानसि ?
सागराञ्चलदर्शनान्ता परा निष्ठा तेऽस्ति किम् ?
उष्णरक्तं किंनु नष्टं दहनभीतिं प्राप्तवानसि ?
पौरुषं ते किं विनष्टं तुहिनभीतिं प्राप्तवानसि ?

25

दुर्गन्धोऽयं कुतोन्विति त्वं हन्त पिधत्से नासां किम् ?
धूर्तत्वं वा कस्येति त्वं मनो विधत्से विकलं किम् ?
चोरगणे ते गेहे मूढ! प्रकल्पयति बहुतन्त्राणि
किमितीदं ननु नीचकुतन्त्रं विगर्हसे वा नितरां किम् ?
निर्विण्णो ननु दिशो विलोक्य प्रकटयसे निष्क्रियतां किम् ?

26

एकफाले रवेरुदये लोकवृत्तिः कीदृशी स्यात् !
एकहस्ते सर्वकार्ये मानवालेः का गतिः स्यात् !
बहुजनासम्मता खलु सा भावना भ्रमपूरितैव
स्वीयवाक्ये शासने सति प्रजावाक्यं किमर्थं स्यात् !
स्पृष्टमात्रं काञ्चनं चेत् श्रमः को वा मूल्यवान् स्यात् !

27

त्वदीय एव तु करवालो ननु निशात इति मा तर्जय लोकम्
त्वदीय एव तु भुजदण्डो ननु बलवानिति मा भर्त्सय लोकम्
कस्या अपि वा दिशो नु धिषणा स्फुलिङ्गतुल्या नूनं प्रभवेत्
त्वदीयमेव तु नेत्रयुगं ननु तैक्ष्ण्यवदिति मा प्राप्नुहि दर्पम्
त्वदीय एव तु कण्ठरवो ननु प्रचण्ड इति मा प्राप्नुहि गर्वम्

28

पक्षिपक्षा नभोमार्गे घनच्छत्राः सार्थका ननु
स्रवत्तटिनी सस्यजालं शोभयन्ती सार्थका ननु
विना लक्ष्यं याप्यमानं जीवनं वा किमर्थं स्यात्
प्राप्तविद्या लोकजीवनमेधयन्ती सार्थका ननु
शृङ्खलायां विनष्टायां पराधीनः सार्थको ननु

29

अर्पितैर्ननु नारिकेलैर्गणय मा ते भक्तिभावम्
नित्यमावृत्ताक्षसूत्रैर्गणय मा ते मुक्तिभावम्
चिराभ्यस्तं मार्गमेतं रचय यत्नं परित्यक्तुम्
मुहुश्चक्षुस्सूचनाभिर्निगद मा ते रक्तिभावम्
मुहुः सक्थ्यास्फालनैर्ननु कथय मा ते शक्तिभावम्

30

अनुगच्छन्तीमपि वा छायामुपयुनक्ति वै स्वार्थः
कृत्वाप्यक्षं भगवन्तं तं विक्रीडति वै स्वार्थः
मर्त्यस्यान्तस्तामसभावो बहुविधवेषान् धरते
यशसेऽल्पाय च महतीं नीतिं संछिनत्ति वै स्वार्थः
अल्पपदव्यै राष्ट्रियकीर्तिं नाशयते वै स्वार्थः

**31**

वर्षे सति लघुनि महन्निजपक्षोड्डयनमेव
पार्श्वजने संहृष्टे ताराणां लाभ एव
बाल्यगुणे महति सति तु कथं वर्धसे च त्वम् ?
शुभवृत्ते श्रुते लघुनि भवति मृदा स्वर्णमेव
सन्धौ वा संवृत्ते लोकोऽयं स्वर्ग एव

**32**

आप्तं मित्रं स्नेहोधो यदि भिन्ते स तु खलु नरकः
सच्छीले यदि निन्दापङ्कं क्षिप्तं स तु खलु नरकः
मनो दहन्ती बाधा नरकं तत्र तु नहि संशीतिः
दुष्टा जिह्वा श्लाघां वा यदि कुरुते स तु खलु नरकः
नीचारोपितमाल्यं यदि वा ध्रियते स तु खलु नरकः

33

अन्तरा निर्घर्षणं ननु ज्वलति वा वज्रं कथम् ?
अन्तरा संक्षुब्धतां ननु तिष्ठति त्वब्धिः कथम् ?
अन्तरा ननु चेतनां नहि वस्तुजालं चलति किञ्चित्
अन्तरा च प्रेरणां ननु भवति वा नादः कथम् ?
अन्तरा च स्पन्दनं ननु जीवति तु हृदयं कथम् ?

34

कुटिलगतीनां धीरतया ननु प्रतिघटनं खलु धर्माग्रहः
मूर्खमतीनां मौर्ख्यस्य तु ननु संज्वलनं खलु कर्माग्रहः
आग्रहशब्दस्यार्थं ननु मा भावय लोकाभ्यस्तम्
अतिरोगमने त्यागे वा ननु प्रवर्तनं खलु सत्याग्रहः
न्याय्ये वर्त्मनि सततं वा ननु संस्थानं खलु नित्याग्रहः

## 35

मनुजं नितरां भिन्दन् क्रकचो दुःखम्
मनसो मूलं भिन्दत् खात्रं दुःखम्
दुःखस्यान्तं तरन् हि जीवः शस्तः
आशापक्षान् दहन् हि तापो दुःखम्
आशयगतींश्च निगिरन् कूपो दुःखम्

## 36

संसर्गेण तु रहितं शुद्धं दर्शय रक्तम्
साङ्कर्येण तु रहितं शुद्धं दर्शय वर्णम्
विलिखितरेखासीमनि वृत्तिः किं ननु शक्या
मृत्स्पर्शेन तु रहितां कामपि दर्शय सरितम्
अन्यप्रभावरहितं किञ्चन दर्शय चित्तम्

37

अनुगच्छति या छायेव त्वां सैव यथार्था कीर्तिर्लोके
मृत्युकरेषु तु न पतति या वा सैव विनिश्चलकीर्तिर्लोके
धनेन ढक्कावादनेन वा क्रीता लोके नैव सुकीर्तिः
उद्गच्छति या मलिनात् पङ्कात् सैव विशुद्धा कीर्तिर्लोके
अतिगच्छति याऽधस्स्थदशाया सैव विनिर्मलकीर्तिर्लोके।

38

निग्रहस्ते सहजगुण इति गर्वितो ब्रूषे ननु ?
परमशान्तिर्लक्ष्यमिति ते निश्चितं ब्रूषे ननु ?
नैव साम्यं कर्मवचसोर्लेशतो वा दृश्यते
कामजातं त्यक्तमिति वा वर्धयसि दर्पं ननु ?
धर्मकेतनमुद्वहन् वा नाशयसि सत्यं ननु ?

39

वह्निं किरति च मरुभूभागे वारिबिन्दुराशा
मृत्युसूचके समाधिशीर्षे घासाङ्कुर आशा
यद्याशा नहि लोकः सर्वो जीवति नो नितराम्
विलुप्तकान्तेर्नभसस्त्वक्ष्णः शुक्रतारमाशा
पार्श्वत्त्रुट्या पतितो वपुषो पक्षिगरुच्चाशा

40

इदमेव तु मन्त्राक्षरमिति किं प्रकटयसे बहुकालम् ?
अयमेवाक्षुण्णोऽध्वेति च किं प्रब्रूषे बहुकालम् ?
अतिपरमलवान् गन्धश्चेदिह प्रकटनैस्तु को लाभः !
व्यूहस्तवैव नूतन इति किं घोषयसे बहुकालम् ?
क्षुण्णे नितरां चिराच्च मार्गे जीवसि किं बहुकालम् ?

41

जलोपप्लवे महति च सुलभं समुद्गतं खलु जीवनम्
पराजयेषु च धीरं वेगात् समुद्गतं खलु जीवनम्
आमरणं जनजीवनमिति वा जातकचक्रे स्थितमेव
अपगच्छतु वा स्वीयः प्राणो जनशस्तं खलु जीवनम्
प्रलोभजाते सत्यपि नीत्या सन्नियतं खलु जीवनम्

42

को वा कस्य सहायस्त्विति वा मा वद शुष्कं वेदान्तम्
स्वल्पमेव बहु कीर्तयंश्च ननु मा वद व्यर्थं राद्धान्तम्
धिषणा सर्वा तवैव धनमिति रुचिरः स्वप्नः प्राप्तो वा ?
सर्वकथास्वपि यत्नेन त्वं मा मेलय ते वृत्तान्तम्
उक्तं सर्वं मदीयमिति ननु मा मेलय ते सिद्धान्तम्

## 43

तर्कसमुद्रोत्तीर्णज्ञानिन आत्ममनः खलु प्रश्नः
जन्महेतुविज्ञातृसंयमिन आत्मतनुः खलु प्रश्नः
प्रश्नैर्हीनं स्वं मनुते यो विश्वसनीयः स तु किम् ?
जनप्रवाहं नयतो नेतुस्त्वात्मवर्तनं प्रश्नः
दैवगतेर्बोधयितुर्ध्यानिन आत्मजीवनं प्रश्नः

## 44

यत्तु संवर्धयति नायुर्भवति तत्किं भेषजं वा ?
यत्तु दुर्णयमथ न रुन्धे भवति तत्किं प्रहरणं वा ?
स्वस्य सारे दर्शिते खलु जगति सत्ता सार्थका ननु
यो न चित्तप्राणदायी प्राणवायुः सोऽपि किं वा ?
यत्तु मरणं नावरुन्धे भवति तत्किं जीवितं वा ?

45

वाचादुर्गविभेदी बाणो मौनम्
मर्त्यैं मननविबोधि ज्ञानं मौनम्
मौनस्यागाधत्वं वचसो दूरे
मोहस्तरनिर्दलकं मथनं मौनम्
मनसो दीप्तिविधानं नयनं मौनम्

46

यद्वै मरुतं नोद्भिन्ते तन्नैव विमानम्
यद्वै मिथ्यां नोच्छिन्ते तन्नैव प्रमाणम्
समन्वयेन तु लक्ष्यमुन्नतं किं साध्यं वा ?
यद्वै चलनविहीनं तन्नैव प्रयाणम्
यद्वै कालं नात्येति च तन्नैव विधानम्

## 47

पदे पदे क्षोभैरक्षुब्धं कदापि शिरस्तु समुद्रः
ऋतुभिः पीते वाप्यक्षीणे शोभा परा तु समुद्रः
अब्धिः केवललवणजलं त्विति यदि वा भ्रमसि तु किं स्यात् ?
संक्षोभार्तं वापि न भिन्नं कदापि मनस्तु समुद्रः
नभसि तु शीर्णै पतिते वोपरि स्थिरधीर्नरस्तु समुद्रः

## 48

गीतध्वानैर्जनताश्रवसां विभञ्जने किं पर्वदिनम् ?
मनसि न पूते नूतनवस्त्रैरलङ्कृतौ किं पर्वदिनम् ?
विघ्नांस्तीर्त्वा लक्ष्यशिखरिणस्त्वधिरोहे किं पर्व भवेत् ?
गलतो वयसो वृद्ध्यै कविताग्रथने वा किं पर्वदिनम् ?
पुराकथानां मूर्तीः कृत्वा प्रपूजने किं पर्वदिनम् ?

49

मथनं यदि नो किञ्चित् मृत्पिण्डं स्याद्धृदयम्
मननं यदि नो किञ्चित् मेधा केवलयन्त्रम्
त्वरितगतेरुत्साहः किञ्चित् स्यात्सञ्चलनेनैव
कथनं यदि नो चरितं केवलघटनाभरितम्
मरणं यदि नो लोकस्तप्येज्जरया सुचिरम्

50

ज्योतिरिङ्गण एव चाणुर्बाधतेऽन्धं तमो नूनम्
करद्वयसं त्वातपत्रं गाढवृष्टेरवति नूनम्
सतो लेशः कर्मणो वा क्रान्तिमिष्टामिह विधत्ते
पंक्तिगमनं पीलकानां नाशयति वै दूरभावम्
मुग्धमोहनदुग्धहासः शोधयति पापानि नूनम्

51

पदवीलब्ध्यै किं मनुजोऽयं बहुविधवेषानिह धरते ?
ग्रासप्राप्त्यै किं मनुजोऽयं बहुधा नैकान् वञ्चयते ?
महनीयेति च मानवमूर्तिः परिगणिता ननु चिरकालात्
स्वीयस्थित्यै किं मनुजोऽयं नैकान् प्राणानन्तयते ?
कीर्तिप्राप्त्यै किं मनुजोऽयं बहुविधपापानि तु कुरुते ?

52

हस्तस्य क्षेपणेन याति तमो दूरं किम् ?
कोपेन तु घोषणेन निश्शब्दा झिल्ल्यः किम् ?
विषमपि वा पीत्वा त्वं गच्छ पुरोऽवश्यमेव
विहितानि प्रार्थनानि पापानि घ्नन्ति च किम् ?
विहितानि प्रकटनानि लोपान्वा घ्नन्ति च किम् ?

53

लीलया मुष्टौ निबद्धं ज्वलनमपि वा चन्दनम्
पूर्णनेत्रं स्वापलाभे रुद्रभूरपि नन्दनम्
वस्तुनः सर्वस्य तत्त्वं निर्णयति को वाऽपि जगति
दर्शनेऽथ प्रेमपूर्णे स्थाणु वापि च मोहनम्
मानसान्तःस्पर्शलब्धौ मृदःपिण्डं काञ्चनम्

54

मलिनता न विधूयते किं स्वेन चात्मनि धूयमाने
परिधिरथ न विलुप्यते किं स्वेन चात्मनि सीव्यमाने
धरन्नन्वगुण्ठनं वा नयसि चित्तं कियत्कालम्
अहन्ता न विहन्यते किं स्वेन चात्मनि शोध्यमाने
सत्यमथ नोदेति वा किं स्वेन चात्मनि बुध्यमाने

**55**

प्रमादे सति पदः पतनं भवति सोपानादवश्यम्
लङ्घिते सति सीम्नि पिहितिर्भवति समुदायादवश्यम्
अर्हवर्तन एव पदवी मान्यतां भजते नु लोके
सूत्रबन्धे विश्लथे वा बन्धमुक्तिर्नन्ववश्यम्
परीवाहेऽतिमर्यादे कूललङ्घनमथावश्यम्

**56**

लब्धमिव सदलब्धमथ यत्तन्नभः स्मर नातिसुलभम्
करतले सद्यश्च दूरीभवति तत्स्मर सृष्टिचित्रम्
स्वल्पमात्रेणैव विकले मनसि तीरं कथं यायाः
जनसमूहे या निगूढिस्तां तु गणयारण्यवासम्
दर्पणं परिहसति चेत्स्वं स्वीयदोषं भावयैनम्

## 57

सम्पत् सफला खलु सा नैकैर्भोज्या ननु या
पदवी सफला खलु सा रञ्जयति च नैकान् या
अन्यायत्ता ननु या विफला सा ननु शक्तिः
धिषणा सफला खलु सा भिन्ते सूक्ष्मांशं या
बलवत्ता खलु सफला दुर्बलविनुता ननु या

## 58

प्लास्टिक्पुष्पाण्यपि वा सुरभीकुरुते पदवी
अष्टावक्रं विकृतं रम्यं कुरुते पदवी
अनुकूलेऽधिकृते सति सत्कारा नैके स्युः
खल्वटशिरसि च रिक्ते केशान् कुरुते पदवी
षण्डं चापि पुमांसं वीरं कुरुते पदवी

59

कुसुममृदुता ज्ञायते खलु कण्टकस्पर्शे सति
उषोमहिमा ज्ञायते खलु तमसि ननु सान्द्रे सति
पार्श्वमपरं त्वदृष्ट्वा वा पूर्णसत्यं वदसि किम् ?
सौख्यमहिमा ज्ञायते खलु दुर्भरे दुःखे सति
प्राणितत्त्वं ज्ञायते खलु वर्ष्मणो नाशे सति

60

पञ्चाङ्गोर्वीरुहात्तु प्रपतितांश्च दिवसान् पठ
पारिषद्यमेधाया उद्गतांश्च वादान् पठ
तत्त्वं न ज्ञायते च विना गाढशोधं ननु
स्यूतेष्वथ चाननेषु निःश्वासि क्रोधं पठ
करचालनमिषेणाथ पिहितान्तरभेदान् पठ

## 61

तावदेव त्वस्थिसत्ता भङ्गरहितिर्यावदस्य
तावदेव तु गेहसत्ता नमनरहितिर्यावदस्य
दम्भवाचः सन्तु विविधा जगति नित्यं श्रूयमाणाः
तावदेव तु हृदयसत्ता भेदरहितिर्यावदस्य
तावदेव तु माल्यसत्ता म्लानरहितिर्यावदस्य

## 62

दीपवर्तौ द्रवीभावं विना दीप्तिर्भवति किम् ?
शिलागर्भे तक्षणेन तु विना शिल्पं भवति किम् ?
फलप्राप्तिर्मानवानां गाढपरिणतिमूलका
जलधिवारिषु किरणतापं विना मेघो भवति किम् ?
शिक्षणं पदयोश्च बहुलं विना नृत्यं भवति किम् ?

63

यावदेष प्राप्यते नो तावदेव स्वप्नशोभा
यावदेष प्रस्खलति नो तावदेव त्वब्धिशोभा
मुग्धभावेष्वनेकेषु च मनसि मुहुरप्युद्भवत्सु
यावदेषा प्रकटिता नो तावदेव त्रपाशोभा
यावदेष च्यवति नो वा तावदेव स्नेहशोभा

64

काकाधिष्ठितपरिषदि गायन्ति पिकाः किं वा ?
गुप्तास्त्रे दैवगृहे फलति च भक्तिः किं वा ?
सर्वं कुशलं नन्विति सूक्तिस्तु कियत्कालम् ?
धौर्त्याविष्टे सदने भद्रं जीवति किं वा ?
उरगाविष्टे वदने न्यायस्तिष्ठति किं वा ?

65

सुन्दरोहनिचये वा सन्ततं तु निमज्ज मा
विभिन्नावगुण्ठनेषु सुखजालं भावय मा
तव परितो विद्यतेऽद्य परीमलो हृद्यतमः
भाविनं तु दुर्गन्धं भ्रान्तः सन् विस्मर मा
धिक्कुरुते छाया चेत् त्वदीयैव चिन्तय मा

66

शिल्पस्वप्ना विकीर्येयुः शिलाः स्पृष्ट्वा प्रबोधय मा
ऊहनाका विकीर्येयुर्भुवं बद्धा विचालय मा
विचित्रा खलु परिणतिः स्यान्मौनभावे गाहमाने
सत्यदृश्यं विकीर्येन्ननु स्तम्भयस्व स्वप्नमथ मा
घोषयन्ते पुरस्तट्यो वलयितोर्मिं प्रदर्शय मा

## 67

तरङ्गितस्याब्धेर्ननु वृद्धिर्वा कृशता वा
सारवति च वृक्षे ननु कीटो वा पत्रं वा
महिमानं सम्प्राप्तुं महान् गुणस्त्वपेक्ष्यते
प्राणवतो वपुषो ननु शयनं वा यानं वा
पीठस्थितबुधस्यैव पूजा वा निन्दा वा

## 68

एक एव यामीति तु मा चिन्तय कदावापि
कुण्ठितं तु जीवितमिति मा रोदीः कदावापि
वह्निकल्पसङ्कल्पस्तव कवचो भवति सदा
प्रलोभेषु नो हृदयं विक्रेयं कदावापि
निष्क्रियमथ दैवं नो विश्वास्यं कदावापि

69

उत्पततो मारुतेन तृणदलस्य शक्तिः का ?
परीवाहदर्पितस्य बुद्बुदस्य सत्ता का ?
महाभाग्यमिह प्राप्तमिति दर्पे को लाभः ?
दर्पितस्य समुद्रे तु दर्दुरस्य क्रान्तिः का ?
क्षणिकभाग्यसमुत्पन्नदुर्मतेश्च दृप्तिः का ?

70

विलसद्दृष्टिततिं खलु मलिनयते द्वेषः
सुन्दरभावेषु क्रुधं मेलयते द्वेषः
समुत्कटे द्वेषे सति नाशस्तु ध्रुव एव
वाचागुल्मे विषमिव प्रसर्पति द्वेषः
मानुषहृदये मृग इव संज्वलति द्वेषः

## 71

बिन्दुरेकोऽप्यलं मृत्स्नागलं भूरि ध्वनयितुम्
हास्यवागेकाऽप्यलं ननु हासतारा जनयितुम्
स्वप्नरचितव्यूहनिचये किन्नु मूल्यं वर्तते ?
विद्युदेकाऽप्यलं लघ्वी गगनपार्श्वं भ्रमयितुम्
हतिस्त्वेकाऽप्यलं क्षोणीगरुतमथ चोत्क्रमयितुम्

## 72

क्रीडनकं विना कथं केलीं वा दर्शयसे ?
बीजजलैर्विना कथं सस्यं वा वर्धयसे ?
कदापि वा समभूवन् वार्ता ननु हीनबलाः
पदस्वरौ विना कथं गीतं वा श्रावयसे ?
न्यायपथं विना कथं लोकं वा पालयसे ?

73

प्रसूनेषु विहरन् वा मन्दमारुतो बिभेति किं कदापि
वा कण्टकेभ्यः ?
गोपुरेषु विहरन्ती सूर्यदीधितिर्जुगुप्सते कदापि किं
न्ववकरेभ्यः ?
समतले च प्रवहत्तस्तु सरिद्वारिणः समानैर्व
हरितधरा मरुभूमिर्वा ?
भेदभावविरहितस्तु मानवो ननु मानयते जगतिं
किन्नु कुलमेकं वा ?
मानवतां मानयत्तु शुद्धमानसं मानयते जगति किन्नु
मतमेकं वा ?

74

पङ्कस्थितमपि नित्यं पद्मं किं हीयते ?
तालीदलगतमपि वा पद्यं किं हीयते ?
मौलिकशक्त्यां सत्यां को वा रुन्धे जनम्
अरसिकदूषितमपि वा गानं किं हीयते ?
मूर्खैर्दूषितमपि वा ज्ञानं किं हीयते ?

## 75

भृशं कृष्टा चापि धरणी ननु क्षुब्धा कदावापि ?
भृशं याता चापि तटिनी ननु श्रान्ता कदावापि ?
अल्पमेवं तु कर्म कृत्वा ननु श्राम्यथ भृशं किंवा
भृशं चोड्डीनं तु गगनं ननु न्यूनं कदावापि ?
भृशं श्वसितो वापि वायुः किन्नु हीनः कदावापि ?

## 76

प्रदर्शयन् वारिखगं मरालं तु निगदसि ?
अवगाढं पल्वलं तु जलधितलं कथयसि ?
भ्रम एव त्वाविष्टो गर्वो वा ह्याविष्टः
आरूढं ग्रावाणं हिमाचलं किन्नु वदसि ?
क्रोशमेव चातिगत्य गम्यं तत् प्रवदसि ?

77

दृष्टमात्रे वस्तुजाते तत्त्वमस्य हि परीक्ष्येत
लिखितमात्रं चित्रजातं त्वक्षियुगमानन्दयेत
न्यूनता नहि काचि़दिति ननु मनसि तृप्तिर्वा किमर्था ?
लिखितमात्रं वाक्यजालं हृदयमथ बहु मोदयेत
विहितमात्रं कार्यजातं लोकमथ बहु हर्षयेत

78

वंटभूरुहमुपागम्य चूतफलं मान्वेषय
कण्टकलतिकामुपेत्य कुटजसुमं मान्वेषय
वरणसमय एव जनः प्रकटयतु च विज्ञत्वम्
तुहिनधूममुपागम्य वर्षजलं मान्वेषय
स्वप्नोहाननुभूय क्षामहतिं मा भावय

79

प्रधावनं समुद्दिश्य पादः किं शिक्ष्येत ?
स्वरसौष्ठवमुद्दिश्य च श्रुतिस्तु किं बोध्येत ?
सत्ये ननु नित्यमेव प्रत्यक्षं दृष्टे सति
क्षतिरूपं समुद्दिश्य हृदयं किं ज्ञाप्येत ?
चितिरूपं समुद्दिश्य मरणं किं शिक्ष्येत ?

80

अगाधतामवगन्तुं त्ववगाहाः कति वापि
औन्नत्यं परिमातुं चोत्पतनं कियद्वापि
उपर्युपरि यदि स्पृशसि कथं वस्तुलब्धिः स्यात् ?
स्थाणूनां शिल्पकृतौ संस्कारः कियान् वापि
अश्मनां हि शिल्पकृतौ भावनास्तु कति वापि

81

अद्रिभिस्तु निरुद्धोऽपि निवृत्तो नं झरीगुणः
उदरतापिदुःखेष्वपि विनष्टो न धरागुणः
नियमबद्धगुणे सति क्षतिर्नास्ति मृतिर्नास्ति
श्वसितावपि रुद्धायां नष्टो न क्षमागुणः
आत्मन्यपि गीर्णे वा न क्षीणो दयागुणः

82

गोलिकास्त्रैर्गले किं वा वने बीजावापयितुः ?
रहस्संज्ञाभिश्च किं वा स्वीयमार्गप्रकटयितुः ?
सदाऽधिज्ये हृदयफलके ज्वलति गम्ये नित्यमेव
वचोभिर्ननु सदसि किं वा गीतिकाया वादयितुः ?
सम्भ्रमैरथ मुहुः किं वा तडागस्य च पारयितुः ?

## 83

सत्यस्य च महतोऽपि ह्यनृतेभ्यः सङ्कटानि
देशस्य च महतोऽपि हि सीमभ्यः सङ्कटानि
कंस्य नेह बाधास्तद्रीतयस्तु भिन्ना ननु
शीलस्य तु महतोऽपि हि धूर्तेभ्यः सङ्कटानि
सिंहस्य तु महतोऽपि हि मशकेभ्यः सङ्कटानि

## 84

विधेस्त्वं यदि विधेयः स्या रक्तमुष्णं विशीर्येत
श्रियस्त्वं यदि विधेयः स्या महान् स्वार्थः प्रवर्धेत
शिरः स्पृष्ट्वा जनैरर्थं विजानीष्व वरं नु तत्
निर्विशेषनिनदाद्वा सुस्थिरोऽर्थः प्रवर्तेत
रुद्रभुव्यपि ननु मनोज्ञं दिव्यगीतं प्रजायेत

## 85

निरुद्धा तु वीची ननु समुद्धता भवत्येव
निरुद्धं तु रोचिर्ननु समुज्ज्वलं भवत्येव
रक्तदग्धचैतन्यं ज्वलत्येव निरन्तरम्
खण्डितं तु द्रुममूलं नवाङ्कुरैः स्फुटत्येव
यन्त्रिता तु जनशक्तिर्बलीयसी भवत्येव

## 86

भुजगफणाच्छायायां सुप्त्वा गायाम्यहम्
खररविकिरणेष्वपि वा सुखेन च तपाम्यहम्
प्रमादपाठप्राप्तं ज्ञानं त्वनुभवगतम्
शिरोव्यथायां संख्या नैका गणयाम्यहम्
यमदूतेनाक्षैर्वा नित्यं क्रीडाम्यहम्

## 87

निरन्तरं प्रवाहिता निर्झरस्य जीवगुणः
निरन्तरं प्रसारिता किरणस्य तु जीवगुणः
बालमतेर्महातृप्तिरहो भवंति लेशतोऽपि
निरन्तरं समीक्षिता परममुनेर्जीवगुणः
अनारतं निरीक्षिता ज्ञानवतो जीवगुणः

## 88

वारिनिधेर्महतीहा वेलाया उत्क्रमणे
भूरुहस्य महतीहा करचालनसञ्चरणे
न हि सुमुखा सृष्टिरियं स्थातुं स्थिररूपेण च
मेघस्य च महतीहा मृत्स्नायां सम्मिलने
मानवस्य महतीहा मिहिरोपर्यधिवसने

89

वाचालो न हि विरमति विना स्ववागुद्गिरणम्
मधुपायी न हि विरमति विना स्वपानोद्रेकम्
हितमपि चोक्तं बहुभिर्न शृणोत्येव कदापि
सञ्चारी न हि विरमति विना स्वमानभ्रंशम्
अतिभोजी न हि विरमति विना प्राणनिष्क्रमणम्

90

प्लवनक्षमहस्तेभ्यो नदी वर्त्म ददात्येव
चलनक्षमपादानां वर्त्म वशे भवत्येवं
स्वस्य करे परिकरे च समभागं समन्विते तु-
दृष्टिक्षमनयनानां वियत् शिरो नमत्येव
दृढमुष्टेर्मरुभूमिस्तरङ्गिता भवत्येव

## 91

ईप्सायां विफलायां मास्म गमो नैराश्यम्
अतर्कितोपनते वा मास्म गमो दौराश्यम्
सत्येव तु समतौल्ये जीवितमिह सार्थं खलु
वाग्जालैर्भीषयंस्तु मास्म भिनो ह्यन्नावम्
नभसि गृहं विनिर्माय मास्मार्षीर्मृत्स्थानम्

## 92

च्युता गरुत् कामयते गगनस्पर्शम्
चितिकण्ठो गायतीव जीविततत्त्वम्
विगृह्णतः सान्तं वै क्रान्तिशालिनः
भक्त्युरुप्रभञ्जनं चरमश्वासः
शातयति हि वनखड्गं त्वाग्रहघोषः

93

भिद्यते यदि भूधरो ननु लभ्यते खलु नूत्नमार्गः
छिद्यते यदि चाम्बरं ननु लभ्यते खलु सत्यधर्मः
कर्मदूरो भवसि चेन्ननु विन्दसे नहि मूलतत्त्वम्
विव्रियेत च यदि तु वचनं ज्ञायते स्तर एव मनसः
मथ्यते यदि मानवो ननु दीप्यते खलु मृतिक्ष्वेडः

94

जालबद्धं स्वप्नजालं दर्शयति या कल्पना सा
जडीभूतां मतिं नित्यं बोधयति या चिन्तना सा
सफलताशंसिप्रयत्नाः कति न लोके सन्ति सुदृढाः
कुञ्चितस्य च हृदो वेगं विधत्ते या स्पन्दना सा
ज्योतिरिव विस्मृतिविहीनं ज्वलति या नन्वर्पणा सा

## 95

व्याकुलो यदि यासि पृष्ठं क्राम्यति त्वां कालपुरुषः
सुदृढयत्नो जृम्भसे चेत् बिभेत्येव हि कालपुरुषः
कर्मयोगी कदावाऽपि हि कालनिघ्नो नैव भवति
पक्ष्मपिहितं यदि तु नेत्रं स्वापयेत च कालपुरुषः
उच्चकण्ठं निरुन्त्से चेदात्मवशगः कालपुरुषः

## 96

अहङ्कारः स तु व्यर्थो यो न कुरुते नूत्नसर्गम्
अलङ्करणं तच्च व्यर्थं यन्न सौन्दर्यस्य जनकम्
प्रकटनानां वस्तुतत्त्वं समेषां ननु विदितमेव
पुरस्करणं तच्च व्यर्थं यन्न प्रतिभाविगणितम्
नमस्करणं तच्च व्यर्थं यत्तु मानसशुद्धिहीनम्

97

समेधते वाग्विततिस्त्वनुकरणेनैव
गर्जयते मनोगलस्त्वनुकरणेनैव
अनुसरणं भवत्येव कदाप्यवार्यं हि
समन्वेति सैन्यगतिः सहचरणेनैव
सङ्घस्थितिरेधते नु सहमननेनैव

98

दुर्भरस्तु निनदो यदि हृद्द्वाराण्यपिधेहि
दुर्गमस्तु पङ्को यदि श्रद्धया पदं निधेहि
दुस्सहस्तु कोपो यदि नाश एव ध्रुवं भवेत्
निजमार्गो रुद्धो यदि प्राणशक्तिमुपादेहि
उरुवैरं कृन्तति यदि प्रतिघटनं संविधेहि

99

पवनसदृशमनसस्त्वाकारं कल्पयति च जिह्वा
उज्झित्वा नयमार्गं वचनीया भवति च जिह्वा
सिरारहितजिह्वेति तु परिहसनं न्याय्यं किम् ?
याथार्थ्यं छलहीनं ह्यक्ष्णोर्दर्शयति च जिह्वा
मण्डूकप्लुतिवादान् भृशं समर्थयति च जिह्वा

100

मनःस्फुरितसर्ववचो भाषणेषु योजय मा
अनन्वितं भावचित्रमनुयोजय सत्ये मा
वेद्यां स्थितिमात्रे किम् रञ्जने न शक्तिर्यदि ?
शक्तिरहितमनुजं पुनरुच्चपदे स्थापय मा
साररहितमाशयं तु समुन्नतं दर्शय मा

## 101

असामर्थ्यगुणे सति च जातकं तु मैवाक्षिप
सारहीनवस्तुनि सति विक्रयं तु मैवाक्षिप
कुत्र दोष इति तत्त्वस्यावगतिर्वरं खलु
अर्थेषु च विगलितेषु जीवनं तु मैवाक्षिप
लेखिन्यां रुद्धायां पत्रकं तु मैवाक्षिप

## 102

अक्षिगोले विनिर्भिन्ने पक्ष्म चलनाद्विरमते वा ?
नदीकूले विनिर्भिन्ने नदी पश्चाद्वीक्षते वा ?
तावदेव प्रतिष्ठा ननु यावदन्तःसारसरणिः
किन्नु गणयति सत्त्वहीनं नरं जरती मक्षिका वा ?
किं तितिक्षागुणविलोपे चलति सिकतारेणुरपि वा ?

**103**

यत्तु सन्न विकासयति तत्तु मतं नैव भवेत्
यत्तु नरं न जीवयति वित्तमदो नैव भवेत्
अर्थरहितवस्तुनस्त्वभावेऽपि च नो भेदः
या जनं न हर्षयते सा पदवी नैव भवेत्
या मतिं न पुरो नयति सा विद्या नैव भवेत्

**104**

विकसति न हि विज्ञानं विदेशेषु भ्रमणेनैव
प्रसरति न प्रौढमतिः पुराणादिपठनेनैव
विना तीव्रमथनगुणं चरमलक्ष्यसिद्धिः कुत्र ?
वरनीतिर्निर्णाङ्कुरिता वचोदानपरिपूर्त्यैव
सत्यतत्त्वलब्धिर्नहि सभासु प्रवचनेनैव

**105**

क्षुद्रकीटो वा2पि वृक्षं कृन्तति प्रबलं समूलम्
क्षतं स्वल्पं वा2पि नूनं बाधते प्रबलं शरीरम्
नाशबुद्धेर्नरपशोर्वा गुरुलघुत्वे को विचारः
स्वल्पनिन्दा वापि नूनं वधूं विदध्यत्येव निभृतम्
लघुर्निन्दा वापि नयते परमलघुतां जगति नूनम्

**106**

विना मुकुरमावरणं भवितव्यम्
विना22कृतिं चित्रकर्म भवितव्यम्
अदृष्टं तु नैवास्तीत्यविवेकः
अनुन्मिषितपक्ष्म चाक्षि भवितव्यम्
अनुज्जृम्भिगरुदस्त्रं भवितव्यम्

107

परान् यस्तु विजानाति परमज्ञः स एवात्र
आत्मानं वेत्ति तु यस्तत्त्वज्ञः स एवात्र
सत्यमतेर्वा लोके मितिरेखा वर्तते नु
अज्ञं स्वं मनुते यश्चात्मज्ञः स एवात्र
सर्वज्ञं मनुते यश्चाल्पज्ञः स एवात्र

108

कुण्ठितजनपृष्ठचपेटिका प्रपञ्चपदी
आवृतनीतेः परमविभासिका प्रपञ्चपदी
तिक्तं वा मधुरं वा मथित्वा22ह नः सिनारे
कुण्ठितगतिचरणानां ज्ञापिका प्रपञ्चपदी
परिणमतां मूल्यानां बोधिका प्रपञ्चपदी



# प्रपञ्चपदी

(तेलुगुमुक्तकानां संस्कृतानुवादः)

अनुवक्ता

**प्रोफेसर. आर. श्रीहरिः**